# ॥ श्रीराधास्तोत्रं उद्धवकृतम् ॥

## ॥ अथ उद्धवकृतं श्रीराधास्तोत्रम्॥

उद्धव उवाच ।
वन्दे राधापदाम्भोजं ब्रह्मादिसुरवन्दितम् ।
यत्कीर्तिकीर्तनेनैव पुनाति भुवनत्रयम् ॥ १॥

नमो गोकुलवासिन्यै राधिकायै नमो नमः ।
शतशृङ्गनिवासिन्यै चन्द्रावत्यै नमो नमः ॥ २॥

तुलसीवनवासिन्यै वृन्दारण्यै नमो नमः ।
रासमण्डलवासिन्यै रासेश्वर्यै नमो नमः ॥ ३॥

विरजातीरवासिन्यै वृन्दायै च नमो नमः ।
वृन्दावनविलासिन्यै कृष्णायै नमो नमः ॥ ४॥

नमः कृष्णप्रियायै च शान्तायै च नमो नमः ।
कृष्णवक्षःस्थितायै च तत्प्रियायै नमो नमः ॥ ५॥

नमो वैकुण्ठवासिन्यै महालक्ष्म्यै नमो नमः ।
विद्याधिष्ठातृदेव्यै च सरस्वत्यै नमो नमः ॥ ६॥

सर्वैश्वर्याधिदेव्यै च कमलायै नमो नमः ।
पद्मनाभप्रियायै च पद्मायै च नमो नमः ॥ ७॥

महाविष्णोश्च मात्रे च पराद्यायै नमो नमः ।
नमः सिन्धुसुतायै च मर्त्यलक्ष्म्यै नमो नमः ॥ ८॥

नारायणप्रियायै च नारायण्यै नमो नमः ।
नमोऽस्तु विष्णुमायायै वैष्णव्यै च नमो नमः ॥ ९॥

महामायास्वरूपायै सम्पदायै नमो नमः ।
नमः कल्याणरूपिण्यै शुभायै च नमो नमः ॥ १०॥

मात्रे चतुर्णां वेदानां सावित्र्यै च नमो नमः ।
नमो दुर्गविनाशिन्यै दुर्गादेव्यै नमो नमः ॥ ११॥

तेजःसु सर्वदेवानां पुरा कृत्युगे मुदा ।
अधिष्ठानकृतायै च प्रकृत्यै च नमो नमः ॥ १२॥

नमस्त्रिपुरहारिण्यै त्रिपुरायै नमो नमः ।
सुन्दरीषु च रम्यायै निर्गुणायै नमो नमः ॥ १३॥

नमो निद्रास्वरूपायै निर्गुणायै नमो नमः ।
नमो दक्षसुतायै च सत्यै नमो नमः ॥ १४॥

नमः शैलसुतायै च पार्वत्यै च नमो नमः ।
नमो नमस्तपस्विन्यै ह्युमायै च नमो नमः ॥ १५॥

निराहारस्वरूपायै ह्यपर्णायै नमो नमः ।
गौरीलोकविलासिन्यै नमो गौर्यै नमो नमः ॥ १६॥

नमः कैलासवासिन्यै माहेश्वर्यै नमो नमः ।
निद्रायै च दयायै च श्रधायै च नमो नमः ॥ १७॥

नमो धृत्यै क्षमायै च लज्जायै च नमो नमः ।
तृष्णायै क्षुत्स्वरूपायै स्थितिकर्त्र्यै नमो नमः ॥ १८ ।
नमः संहाररूपिण्यै महामार्यै नमो नमः ।
भयायै चाभयायै च मुक्तिदायै नमो नमः ॥ १९॥

नमः स्वधायै स्वाहायै शान्त्यै कान्त्यै नमो नमः ।
नमस्तुष्ट्यै च पुष्ट्यै च दयायै च नमो नमः ॥ २०॥

नमो निद्रास्वरूपायै श्रद्धायै च नमो नमः ।
क्षुत्पिपासास्वरूपायै लज्जायै च नमो नमः ॥ २१॥

नमो धृत्यै क्षमायै च चेतनायै च नमो नमः ।
सर्वशक्तिस्वरूपिण्यै सर्वमात्रे नमो नमः ॥ २२॥

अग्नौ दाहस्वरूपायै भद्रायै च नमो नमः ।
शोभायै पूर्णचन्द्रे च शरत्पद्मे नमो नमः ॥ २३॥

नास्ति भेदो यथा देवि दुग्धधावल्ययोः सदा ।
यथैव गन्धभूम्योश्च यथैव जलशैत्ययोः ॥ २४॥

यथैव शब्दनभसोर्ज्योतिर्ःसूर्यकयोर्तथा ।
लोके वेदे पुराणे च राधामाधावयोस्तथा ॥ २५॥

चेतनं कुरु कल्याणि देहि मामुत्तरं सति ।
इत्युक्त्वा चोद्धवस्तत्र प्रणनाम पुनः पुनः ॥ २६॥

इत्युद्धवकृतं स्तोत्रं यः पठेद् भक्ति पूर्वकम् ।
इह लोके सुखं भुक्त्वा यात्यन्ते हरिमन्दिरम् ॥ २७॥

न भवेद् बन्धुविच्छेदो रोगः शोकः सुदारुणः ।
प्रोषिता स्त्री लभेत् कान्तं भार्याभेदी लभेत् प्रियाम् ॥ २८॥

अपुत्रो लभते पुत्रान् निर्धनो लभते धनम् ।
निर्भुमिर्लभते भूमिं प्रजाहिनो लभेत् प्रजाम् ॥ २९॥

रोगाद् विमुच्यते रोगी बद्धो मुच्येत् बन्धनात् ।
भयान्मुच्येत् भीतस्तु मुच्येतापन्न आपदः ॥ ३०॥

अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥ ३१॥

इति श्रीब्रह्मवैवर्ते उद्धवकृतं श्रीराधास्तोत्रं सम्पूर्णम्॥

॥ श्रीराधास्तोत्रं श्रीकृष्णकृतम् ॥

श्रीकृष्ण उवाच ।
एवमेव प्रियोऽहं ते प्रमोदश्चैव ते मयि ।
सुव्यक्तमद्य कापट्यवचनं ते वरानने ॥ १॥

हे कृष्ण त्वं मम प्राणा जीवात्मेति च संततम् ।
ब्रूषे नित्यं तु यत् प्रेम्णा साम्प्रतं तद् गतं द्रुतम् ॥ २॥

अस्माकं वचनं सत्यं यद् व्रवीमिती तद् ध्रुवम् ।
पञ्चप्राणाधिदेवी त्वं राधा प्राणधिकेति मे ॥ ३॥

शक्तो न रक्षितुं त्वां च यान्ति प्राणस्त्वया विना ।
विनाधिष्ठातृदेवीं च को वा कुत्र च जीवति ॥ ४॥

महाविष्णोश्च माता त्वं मूलप्रकृतिरीश्वरी ।
सगुणा त्वं च कलया निर्गुणा स्वयमेव तु ॥ ५॥

ज्योतीरूपा निराकारा भक्तानुग्रहविग्रहा ।
भक्तानां रुचिवैचित्र्यन्नानामूर्तीश्च बिभ्रमती ॥ ६॥

महालक्ष्मिश्च वैकुण्ठे भारती च सतां प्रसूः ।
पुण्यक्षेत्रे भारते च सती त्वं पार्वती तथा ॥ ७॥

तुलसी पुण्यरूपा च गङ्गा भुवनपावनी ।
ब्रह्मलोके च सावित्री कलया त्वं वसुन्धरा ॥ ८॥

गोलोके राधिका त्वं च सर्वगोपालकेश्वरी ।
त्वया विनाहं निर्जीवो ह्यशक्तः सर्वकर्मसु ॥ ९॥

शिवः शक्तस्त्वया शक्त्या शवाकारस्त्वया विना ।
वेदकर्ता स्वयं ब्रह्मा वेदमात्रा त्वया सह ॥ १०॥

नारायणस्त्वया लक्ष्म्या जगत्पाता जगत्पतिः ।
फलं ददाति यज्ञश्च त्वया दक्षिणया सह ॥ ११॥

बिभर्ति सृष्टिं शेषश्च त्वां कृत्वा मस्तके भुवम् ।
बिभर्ति गङ्गारूपां त्वां मूर्ध्नि गङ्गाधरः शिवः ॥ १२॥

शक्तिमच्च जगत् सर्वं शवरूपं त्वया विना ।
वक्ता सर्वस्त्वया वाण्या सूतो मूकस्त्वया विना ॥ १३॥

यथा मृदा घटं कर्तुं कुलालः शक्तिमान् सदा ।
सृष्टिं स्रष्टुं तथाहं च प्रकृत्या च त्वया सह ॥ १४॥

त्वया विना जडश्चाहं सर्वत्र च न शक्तिमान् ।
सर्वशक्तिस्वरूपा त्वं समागच्छ ममान्तिकम् ॥ १५॥

वह्नौ त्वं दाहिका शक्तिर्नाग्निः शक्तस्त्वया विना ।
शोभास्वरूपा चन्द्रे त्वं त्वां विना न स सुन्दरः ॥ १६॥

प्रभारूपा हि सूर्ये त्वं विना न स भानुमान् ।
न कामः कामिनीबन्धुस्त्वया रत्या विना प्रिये ॥ १७॥

इत्येवं स्तवनं कृत्वा तां सम्प्राष जगत्प्रभुः ।
देवा बभूवुः सथीकाः सभार्याः शक्तिसंयुताः ॥ १८॥

सस्त्रीकं च जगत् सर्वं बभूव् शैलकन्यके ।
गोपीपूर्णश्च गोलोको बभूव तत्प्रसादतः ॥ १९॥

राजा च जगाम् गोलोकमिति स्तुत्वा हरिप्रियाम् ।
श्रीकृष्णेन कृतं स्तोत्रं राधाया यः पठेन्नरः ॥ २०॥

कृष्णभक्तिं च तद्दास्यं स प्राप्नोति न संसयः ।
स्त्रीविच्छेदेयः शृणोति मासमेकमिदं शुचिः ॥ २१॥

अचिराल्लभते भार्यां सुशीलां सुन्दरीं सतीं ।
भार्याहीनो भाग्यहीनो वर्षमेकं शृणोति यः ॥ २२॥

अचिराल्लभते भार्यां सुशीलां सुन्दरीं सतीं ।
पुर मया च त्वं प्राप्ता स्तोत्रेणानेन पार्वति ॥ २३॥

मृतायां दक्षकन्यायामाज्ञया परमात्मनः ।
स्तोत्रेणानेन सम्प्राप्ता सावित्री ब्रह्मणा पुरा ॥ २४॥

पुरा दुर्वाससः शापान्निःश्रीके देवतागणे ।

स्तोत्रेणानेन देवैस्तैः सम्प्राप्ता श्रीः सुदुर्लभा ॥ २५॥

शृणोति वर्षमेकं च पुत्रार्थि लभते सुतम् ।
महाव्याधी रोगमुक्तो भवेत् स्तोत्रप्रसादतः ॥ २६॥

कार्तिकीपूर्णमायां तु तां सम्पूज्य पठेत्तु यः ।
अचलां श्रियमाप्नोति राजसूयफलं लभेत् ॥ २७॥

नारी शृणोति चेत् स्तोत्रं स्वामिसौभाग्यसंयुता ।
भक्त्या शृणोति यः स्तोत्रं बन्धनान्मुच्यते ध्रुवम् ॥ २८॥

नित्यं पठति यो भक्त्या राधां सम्पूज्य भक्तितः ।
स प्रयाति च गोलोकं निर्मुक्तो भवबनात् ॥ २९॥

इति श्रीब्रह्मवैवर्ते श्रिकृष्णकृष्णकृतं
श्रीराधास्तोत्रं सम्पूर्णम् ।

॥ श्रीराधास्तोत्रं गणेशकृतम् ॥

श्रीगणेश उवाच ।
तव पूजा जगन्मातर्लोकशिक्षाकरी शुभे।
ब्रह्मस्वरूपा भवती कृष्णवक्षःस्थलस्थिता ॥ १॥

यत्पादपद्ममतुतलं ध्यायन्ते ते सुदुर्लभम् ।
सुरा ब्रह्मेशशेषाद्या मुनीन्द्राः सनकादयः ॥ २॥

जिवन्मुक्ताश्च  भक्ताश्च सिद्धेन्द्राः कपिलादयः ।
तस्य प्राणाधिदेवि  त्वं प्रिया प्राणाधिका परा ॥ ३॥

वामाङ्गनिर्मिता राधा दक्षिणाङ्गश्च माधवः ।
महालक्ष्मीर्जगन्माता तव वामाङ्गनिर्मिता ॥ ४॥

वसोः सर्वनिवासस्य प्रसूस्त्वं परमेश्वरी ।
वेदानां जगतामेव मूलप्रकृतिरीश्वरी ॥ ५॥

सर्वाः प्राकृतिका मातः सृष्ट्यां च त्वद्विभूतयः ।
विश्वानि कार्यरूपाणि त्वं च कारणरूपिणी ॥ ६॥

प्रलये ब्रह्मणः पाते तन्निमेषो हरेरपि ।
आदौ राधां समुच्चार्य पश्चात् कृष्णं परात्परम् ॥ ७॥

स एव पण्डितो योगी  गोलोकं याति लीलया ।
व्यतिक्रमे महापी ब्रह्महत्यां लभेद् ध्रुवम् ॥ ८॥

जगतां भवती माता परमात्मा पिता हरिः ।
पितुरेव गुरुर्माता पूज्या वन्द्या परत्परा ॥ ९॥

भजते देवमन्यं वा कृष्णं वा सर्वकारणम् ।
पुण्यक्षेत्रे महामूढो यदि निन्दा राधीकाम् ॥ १०॥

वंशहानिर्भवेत्तस्य दुःखशोकमिहैव च ।
पच्यते निरते घोरे याव द्रदिवाकरौ ॥ ११॥

गुरुश्च ज्ञानोद्गिरणाज्ज्ञानं स्यान्मंत्रतंत्रयोः ।
स च मन्त्रश्च तत्तन्त्रं  भक्तिः  स्याद् युवयोर्यतः ॥ १२॥

निशेव्य मन्त्रं देवानां जीवा जन्मनि जन्मनि ।
भक्ता भवन्ति दुर्गायाः पादपद्मे सुदुर्लभे ॥ १३॥

निषेव्य मन्त्रं शम्भोश्च जगतां कारणस्य च ।
तदा प्राप्नोति युवयोः पादपद्मं सुदुर्लभम् ॥ १४॥

युवयोः पादपद्मं च दुर्लभं प्राप्य पुण्यवान् ।
क्षणार्धं षोडशांशं च न हि मुञ्चति दैवतः ॥ १५॥

भक्त्या च युवयोर्मन्त्रं गृहीत्वा वैष्णवादपि ।
स्तवं वा कवचं वापि कर्ममूलनिकृन्तनम् ॥ १६॥

यो जपेत् परया भक्त्या पुण्यक्षेत्रे च भारते ।
पुरुषाणां सहस्रं च स्वात्मना  सार्धमुद्धरेत् ॥ १७॥

गुरुमभ्यर्च्य विधिवद् वस्त्रालंकारचन्दनैः ।
कवचं धारयेद् यो हि विष्णुतुल्यो भवेद् ध्रुवम् ॥ १८॥

॥ इति श्री ब्रह्मवैवर्ते गणेशकृतं श्रीराधास्तवनं सम्पूर्णम् ॥

श्रीराधास्तोत्रं ब्रह्मदेवकृतम्

ब्रह्मोवाच ।
हे मातस्त्वत्पदाम्भोजं दृष्टं कृष्णप्रसादतः ॥ १॥

सुदुर्लभं च सर्वेषां भारते च विशेषतः ।
षष्टिवर्षसहस्राणि तपस्तप्तं पुरा मया ॥ २॥

भास्करे पुष्करे तिर्थे कृष्णस्य परमात्मनः ।
आजगाम वरं दातुं वरदाता हरिः स्वयम् ॥ ३॥

वरंवृणीष्वेत्युक्ते च स्वाभिष्टं च वृतं मुदा ।
राधिकाचरणाम्होजं सर्वेषामपि दुर्लभम् ॥ ४॥

हे गुणातित मे स्न्हीघ्रमधुनैव प्रदर्शय ।
मयेत्युक्तो हरिरयमुवाच मां तपस्विनम् ॥ ५॥

दर्शायिष्याम्मि काले च वत्सेदानीं क्समेति च ।
न हीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम् ॥ ६॥

सर्वेषां वाञ्चितं मातर्गोलोके भारतेऽधुना ।
सर्वा देव्यः प्रकृत्यंशा जन्याः प्राकृतिका ध्रुवम् ॥ ७॥

त्वं कृष्णाङ्गार्धसम्भूता तुल्या कृष्णेन सर्वतः ।
श्रीकृष्णस्त्वमयं राधा वा हरीः स्वयम् ॥ ८॥

न हि वेदेषु मे दृष्ट इति केन निरूपितम् ।
ब्रह्माण्डाद् बहिरूर्ध्वं च गोलोकोऽस्ति यथाम्बिके ॥ ९॥

वैकुण्ठशचाप्यजन्यश्च त्वमजन्या तथाम्बिके ।
यथा समस्तब्रह्माण्डे श्रीकृष्णांशांश जीविनः ॥ १०॥

तथा शक्तिस्वरूपा त्वं तेषु सर्वेषु संस्थिता ।
पुरुषाश्च हरेरंशास्वदंशा निखिलाः स्त्रियः ॥ ११॥

आत्मनो देहरूपा त्वमस्याधारस्वमेव हि ।
अस्या नु प्राणैस्त्वं मातस्वत्प्राणैरयमीश्वरः ॥ १२॥

किमहो निर्मितः केन हेतुना शिल्पकारिणा ।
नित्योऽयं च यथा कृष्णस्त्वं च नित्या तथाम्बिके ॥ १३॥

अस्यांशा त्वं त्वदंशो वाप्ययं केन निरूपितः ।
अहं विधाता जगतां वेदानां जनकः स्वयम् ॥ १४॥

तं पठित्वा गुरुमुखाद् भवन्त्येव बुधा जनाः ।
गुणानां वा स्तवानां ते शतांशं वक्तुमक्षमः ॥ १५॥

वेदो वा पण्दितो वान्यः को वा त्वां स्तोतुमीश्वरः ।
स्तवानां जनकं ज्ञानं बुद्धिर्ज्ञानाम्बिका सदा ॥ १६॥

त्वं बुद्धेर्जननी मातः को वा त्वां स्तोतुमीश्वरः ।
यद्वस्तु दृष्टं सर्वेषां तद्विवक्तुं बुधः क्समः ॥ १७॥

यददृष्टाश्रुतं वस्तु तन्निर्वक्तुं च कः क्षमः ।
अहं महेशोऽनन्तश्च स्तोतुं त्वां कोऽपि  न क्षमः ॥ १८॥

सरस्वती च वेदाश्च क्समः कः स्तोतुमीश्वरि ।
यथागमं यथोक्तं च न मां निन्दितुमर्हसि ॥ १९॥

ईस्वराणामीस्वरस्य योग्यायोग्ये समा कृपा जनस्य ।
प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः ॥२०॥

जननी जनको यो वा सर्वं क्समति स्नेहतः ।
इत्युक्त्वा जगतां धाता तथौ च पुरतस्तयोः ॥ २१॥

प्रणम्य चरणाम्भोजं सर्वेस्ःआं वन्द्यमीप्सितम् ।
ब्रह्मणा च कृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः ।
राधामाधवयोः पादे भक्तिं दास्यं लभेद् ध्रुवम् ॥ २२॥

कर्मनिर्मूलनं कृत्वा मृत्युं जित्वा सुदुर्जयम् ।
विलङ्घ्य सर्वलोकाश्च याति गोलोकमुत्तमम् ॥ २३॥

॥ इति श्रीब्रह्मवैवर्ते ब्रह्मण कृतं श्रीराधास्तोत्रं सम्पुर्णं॥

॥ श्रीराधास्तोत्रं ब्रह्मेशशेषादिकृतम् ॥

॥ अथ ब्रह्मेशशेषादिकृतम् श्रीराधास्तोत्रम् ॥

षष्टिवर्षसहस्राणि दिव्यानि परमेश्वरि ।
पुष्करे च तपस्तप्तं पुण्यक्षेत्रे च भारते ॥ १ ॥

त्वत्पादपद्ममधुरमधुलुब्धेन चेतसा ।
मधुव्रतेन लोभेन प्रेरितेन मया सति ॥ २ ॥

तथापि न मया लब्धं त्वद्पादपदमीप्सितम् ।
न दृष्टमपि स्वप्नेऽपि जाता वागशरीरिणी ॥ ३ ॥

वाराहे भारते वर्षे पुण्ये वृन्दावने वने ।
सिद्धाश्रमे गणेशस्य पादपद्मं च द्रक्ष्यसि ॥ ४ ॥

राधामाधवयोर्दास्यं कुतो विषयिणस्तव ।
निवर्तस्व महाभाग परमेतत् सुदुर्लभम् ॥ ५ ॥

इति श्रुत्वा निवृत्तोऽहं कुतो विषयिणस्तव ।
निवर्तस्व महाभाग परमेतत् सुदुर्लभम् ॥ ६ ॥

श्रीमहादेव उवाच ।
पद्मैः पद्मार्चितं पादपद्मं यस्य सुदुर्लभम् ।
ध्यायन्ते ध्याननिष्टाश्च शश्वद् ब्रह्मादयः सुराः ॥ ७ ॥

मुनयो मनवश्चैव सिद्धाः सन्तश्च योगिनः ।
द्रष्टुं नैव क्षमाः स्वप्ने भवती तस्य वक्षसि ॥ ८ ॥

अनत उवाच ।
वेदाश्च वेदमाता च पुराणानि च सुव्रते ।
अहं सरस्वती सन्तः स्तोतुं नालं च सन्ततम् ॥ ९ ॥

अस्माकं स्तवने यस्य भ्रभङ्गश्च सुदुर्लभः ।
तवैव भर्त्सने भीतश्चावयोरन्तरं हरिः ॥ १० ॥

॥ इति श्रीब्रह्मवैवर्ते ब्रह्मेशशेषादिकृतं
श्रीराधास्तोत्रं सम्पूर्णम् ॥